रयिञ्चपुत्रांश्चादात् सव्राधतः शवसानेभिरिति द्वादशादात् तकारेण २

त्रयोदशसंख्याकानि

प्रथमः खण्डः

नयेदिवःपृथिव्या अष्टामह इन्द्रःसमत्सु तस्य पत्मन्नादस्यते विश्वाहाशुक्रं त्वमग्नऋभुरस्यरण्वा सयोव्यस्थाद् धेनुं नत्वा नदेवानां मक्षूकनाया आतत्त इन्द्रेति त्रयोदश विकृतपदानि । त्वम्महानस्यक्रत्वासमिधानस्य प्रद्यावा नित्यन्नसूनुं द्यावाचिदस्मै द्यावानःपृथिवीइममासुष्टुतीनमसा ऽऽनोमित्रावरुणानासत्या प्रवोयज्ञेषु त्वद्विश्वानि भुवनानि द्यावानो अद्य द्यावायमग्निं वसुर्वसूनां क्षयसीति त्रयोदश पृथिवी प्रगृह्यम् १

द्वितीयः खण्डः

वनेमपूर्वीः सहिस्वसृद्रुद्राणामेति तुभ्येदमग्नेयोषेव शिङ्क्ते श्रद्धाइत्ते प्रशुक्रेयंमनीषा हिरण्ययीवां मारभि-स्त्रातारो देवाः प्रतेयक्षि कद्वाहो अर्वाक् स्वधा अवस्तादिति त्रयोदश दीर्घं व्यक्तयः स्वरान्ताः । तथा पूषेति सर्वत्र २

तृतीयः खण्डः

इमाधाना इमारुद्राय शोचिष्केशं वृषणं मृगाणान्नहेतय इमाहित्वामूर्जो चेतयद्धिय इमाहित्वा मतय इमायागावोऽमूराविश्वा मरुद्भिरिन्द्रसख्यमिमा नारीर्यदिमावाजयन्नहमिमा गावः सरमेया इति त्रयोदशेमा विसर्जनीयाः । यत्र गिरस्तत्रेमा विसर्जनीयाः । प्रावीविपद्वर्जम् । इयं वेदिः परोऽनायतो अनिबद्ध आयंजना एषस्तोमोमहेवृषायमिन्द्रा त्वायमर्कस्तत्रगावो ऽयंमाताऽयंपितेतिद्वे दीर्घतन्तुर्बृहदुक्षा त्रायन्तां विश्वा क्रत्वावयोवितार्यायुरायङ्गौः पृश्निरक्रमीदिति त्रयोदशायमाकारपूर्वम् ३

चतुर्थः खण्डः

अवन्तु नः सुजन्मनी उतत्येदेवी आभाति देवी नूरोदसी देवीदेवेभिरिमे चिदस्य तमिन्वस्य देवीदेवस्या धातेअप्रतिष्कुतं देवोदेवीगिरिष्ठा मातरामहीदेवीदेवान् देवीदिवोदुहितरेति त्रयोदश देवी प्रगृह्यम् ४

चतुर्दशसंख्याकानि

प्रथमः खण्डः

यातेअग्ने सानोदुहीयद्यवसेव रायोधारा प्रधारामध्वो अग्रियोऽधुक्षतप्रियं दिवोनसानुतरत्समन्द्यद्रिभिः सुतो मतिभिः सोमस्य धारा विपञ्चिते पवमानायैषाययौ परिष्यसुवानो अक्षाः परितेजिग्युषो अयारुचेति चतुर्दश धाराः स्वरान्ताः १

द्वितीयः खण्डः
कस्यनूनं सनोमह्यै यंतेकाव्यो नाहायमग्निः शाण्डोदाद्धिरणिनः संवांशतेतिद्वे नूनं सोअस्य कामोराये यऋतेचिद्गा नकिर्वक्ता ब्रध्नश्चिदऋ सरस्वतीं सुकृतो अह्वयन्ताग्निर्दाद्रविणमिति चतुर्दश दात्तकारेण २

तृतीयः खण्डः
योरायो३वनि रिन्द्रस्ययुज्य स्त्वमग्नेप्रथमोअङ्गिरा स्त्वन्नःसोमविश्वतोरक्षाराजन् कयानश्चित्रो यआनयत्परावतो योगृणतां धीवतो धीवतोऽश्वीरथीं द्रप्सोमेत्तापुरां येषामिन्द्र स्त्वन्नोवृत्रहन्तमेऽनोवाजानाम्पति रुतवातपितासिन इति चतुर्दश सखार्द्धर्चान्तम् ३

चतुर्थः खण्डः
वधैरुग्रेभि रन्तर्ह्यग्ने मेद्यन्तुते दूतईयसेयुयुजानोऽन्तरीयसे वेरध्वरस्य संस्थेयदग्न उतरात्रीं विभूषन्नग्न उद्यरयत ईशान इमा पर्यूषुप्रधन्व तृष्टामया त्वं हिविश्वभेषज इति चतुर्दश ईयसे सेकारेण ४

पञ्चमः खण्डः
धियोविश्वाः सदाकवी सनेमयेत आशुन्दूतंविवस्वतोऽग्नेसहन्तं हन्नच्युतच्युद् विश्वाहिमाया यस्तिग्मशृङ्गो विश्वामती रभिवां विश्वानियुतः परःसोअस्तु समस्य मन्यवेविशो विश्वायदजयः पुनानो अक्रमी दत्रैवत्वमिह सविश्वाभुव इति चतुर्दश विश्वा विसर्जनीयाः ५

षष्ठः खण्डः
प्रायुस्तारिष्टं नृभिर्यद्युक्तो भात्वक्षस एवेनसद्यः पर्षिणःपारमंहसः शुक्रेभिरङ्गैस्तवत्विषोजनिमन् गवांसहस्रैर्दशप्रपित्वे रायोधारा न्यरातीरराव्णं बृहस्पतेरवथेन नते अदेवो युवोररावेति चतुर्दश रेफोत्तराणि । आयद्धरी स्वायां देव स्तदर्यमा सुकृत्सुपाणि र्विभञ्जनुः सयामन्ना मानोमाता सनोविभावा विसद्मान्युर्विया याहिशश्वत् पावीरवी तन्नोऽहिर्बुध्न्योरापोरेवतीः सवारेभिरिति चतुर्दश

धात्तकारेणार्द्धर्चान्तम् ६

पञ्चदशसंख्याकानि

प्रथमः खण्डः

धियोविश्वा अग्निन्तङ्गीर्भिरुभेवाचौ प्रास्राग्बाहू अग्निर्देवेषु विनाकमख्यद् युजानोहरिता समिद्धोविश्वत ईळेन्यःपवमानः पवमानरसस्तव सहस्रणीतिर्यतिरभीमृतस्य दोहना तृतीयं धाम वातजूतोयस्त्रिंशद्धामेति पञ्चदश राजति । (अग्निमीळे नित्वा यज्ञस्य नित्वाहोतारं यमृत्विजः स्वःश्वायधायसे त्वांयज्ञेष्वृत्विजं न्य१ग्निञ्जातवेदसं आनऋते शिशीहि यज्ञस्य हिस्थ मन्द्रं होतारं सप्तदिशो नानासूर्याः पिप्रीहि देवान् द्युभिर्हितमूर्द्धोग्रावा कश्छन्दसामिति पञ्चदश जकारेण ) १

द्वितीयः खण्डः

त्वे इदग्ने पाहिरीषतः सुशंसोबोधिविश्वान्यद्यज्ञान् पुरोळाअग्ने त्वामग्ने समिधानं न्य१ग्निं जातवेदसं तं त्वा समिद्भिरङ्गिरो भरद्वाजे समिधानस्ताँ अंहसः पिपृहिपर्तृभिरद्रोद्यमावहोशतोऽस्रेधद्भिस्तरणिभि-स्त्वंहयद्यविष्ठ्य चोदिष्ठेन यविष्ट्य यदग्ने कानिकानिचिदिति पञ्चदश यविष्ट्य यकारेण २

षोडशसंख्याकानि

प्रथमः खण्डः

त्वन्न इन्द्रराया प्रतंविवक्म्यतश्चिदस्याऽपारोवः प्रतुविद्युम्नस्य बळित्थामहिमावामनाविद्धया हवन्त इन्द्र सूर्यस्येववक्षथो नूनं सोअस्य सत्यः सोअस्य सद्यः सोअस्य महस्तेसतः सरस्वान्धीभिर्महान् हयस्यै तावानस्येति षोडश महिमा मकारेण १

द्वितीयः खण्डः

पुरन्नशूरदर्षस्युभे सोमप्रणोवचा परिणोदेववीतयेऽभिगव्यानि वीतये केतुं कृण्वन्दिवस्परीन्दोव्यव्यमर्षसि वृषेवयूथैतानिसोम तंत्वा हस्तिनः कविर्वेधस्या कनिक्रददिषमूर्जम्पवमान पुनानः सोमधारया मृज्यमानः सुहस्त्य मृजानो वार इति षोडश अर्षसि सिकारेण २

तृतीयः खण्डः

इन्द्रतारथिनी स्तानोहिन्वन्तु तानश्चोदयत तावान्धियोवसेऽस्मेतायज्ञवाहसा ताघाताभद्रेतिद्वे घृतस्य धाराः समिधोनसन्त याः पार्थिवासो नतानशंत्यग्रंयज्ञस्याऽऽपोहिष्ठा सरत्पदा बृहस्पतिप्रसूता अस्माकं या इषव स्तानः कणूकयन्तीरिति षोडश ता विसर्जनीयाः ३

चतुर्थः खण्डः

वधीर्हिन्दस्यु मातेसुपर्णाः क्षेत्रमिव यथाप्रसूता तस्मा एतम्भरताऽवदंस्त्वं सुकृत्यययायद्भूय इद्वावृध इन्द्रज्येष्ठं विश्वेदहानि ब्रध्रमँश्चतोः सराजसि सत्रात्वं त्वन्न इन्द्राभराऽयन्मावेना न्युप्ताश्च बभ्रव इति षोडश ह्रस्वरङ्गाः । आवदन्नकारं ब्रध्नं यथासंहितम् ४

पञ्चमः खण्डः

स्वस्तिन इन्द्रो धियं पृषाजिन्वतु सनो अग्निः सुवीर्य मागन्देवः स्वस्तिनोमिमीतां परिपूषा तपन्ति शत्रुं तानोनास न्निमागिरः सवितारं येपाकशंस मायुर्विश्वायुर्नाभायत्र समञ्जन्तु चक्षुर्नोदेवो यदाशसाऽऽसिश्चतुप्रजापतिरिति षोडश दधातु तुकारेण ५

सप्तदशसंख्याकानि

प्रथमः खण्डः

देवान्वायत् तं देवाबुध्ने भगन्धियं नासुष्वेरापि रग्रेपाभिः ऋतु पाभिः सञ्जास्पत्य मवैत्वभ्व मेषतेदेवनेत रनुतन्न स्तववायवृतस्पते त्वं हि राधस्पते स आवक्षि दिवस्पृथिव्यो ऋभुक्षावाजो समर्यमा तन्नोरुद्रा तदिद्वदन्तीति सप्तदश विसर्गवन्त्यनिङ्ग्यानि १

द्वितीयः खण्डः

तन्नव्यसीहृद स्तन्नोदातमरुत स्तन्नोवाजा ऋभुक्षण स्तन्नो अग्ने अमीनर स्तन्नोगीर्भिः श्रवाय्यं तन्नाकं चिरशोचिषं तन्नाकमर्यो यस्तेमदः पृतनाषाट् तन्नः सहस्रभरं तन्नोअग्नेमघवद्भ्यस्तन्नेमिं तन्नोविश्वा अवस्युवः समीचीनाः सुदानवो द्वेपवस्तेपरितं यदद्यत्वासूर्य तन्नोद्यावापृथिवी तन्न आप इति प्रथमं ग्रतन्नयग्रतरमिति सप्तदश नकारसंहिते पदं मकारान्तम् २

एकोनविंशतिसंख्याकानि

प्रथमः खण्डः

परिप्रजात स्त्वान्देवेषुप्रथमं महोभिरेतान् यथापूर्वेभ्यो यद्धस्यात इन्द्रश्रुष्टिः पुरुत्राहिविहव्योऽधाह्यग्ने क्रतोः प्रसद्योअग्ने त्वंह्या३पि र्वसानोअत्कं पतिर्बभूथा समोजनाना मवोबभूथ शतमूते मावर्पोअस्मद्यथादूतोवभूथ त्वंहत्यद्वृषभचर्षणीना मभिहिसत्यसोमपा अधाह्यग्नेमह्ना हस्तग्राभस्य प्रियन्तेनामेत्येकोनविंशतिर्बभूथ थकारेण १

द्वितीयः खण्डः

इमेचित्तवानुत्वामही महीअत्र प्रद्यावायज्ञैः स्तेसूनव स्तीर्णाअस्यसंहतो महीसमैरन् महीद्यावापृथिवीइह महीमिस्त्रस्यसाधथ उतयोषणे तेचिद्धिपूर्वे संयन्महीमिथती गाव उपावत सुशिल्पेबृहती ससूनुर्मातरा वियोममेयम्याऽबुध्रमुत्ये द्यावानोअद्य मातरामही इत्येकोनविंशतिर्मही प्रगृह्यम् | यथारोदसी तथामही महीमित्रस्येति वर्जम् २

एकविंशतिसंख्याकानि

प्रथमः खण्डः

आयद्धरी हस्तेदधानोनृम्णा सृजदस्ताधृषता तन्न इन्द्रस्तद्वरुणो महीयदि सुकृत्सुपाणिर्विभञ्जनुः सयामन्ना मानोहिर्बुध्न्योरिषेधाद् देवोदेवः सुहवः स इदस्तेव सनोविभावेन्द्रमेवधिषणा विसद्मान्युर्वियोऽपब्रह्माणि शृणवः पावीरवी कन्या तन्नोहिर्बुध्न्यो१ मनस्तोमान् गयश्चस्थ बृहस्पतिः सहिगोभिरवोर्वायद्धात्तनूष्वित्ये-कविंशतिर्धात् तकारेण १

द्वाविंशतिसंख्याकानि

प्रथमः खण्डः

कियात्यायद् यागोमतीरुषसौभारतीळे यानोदूरे यावोमाया यारोचने याजामयः प्रतेवोचामवीर्या यावांसन्ति श्रियेसुदृशीरुपरस्ये मायागावो यावातेसन्तिदाशुष इन्द्रोयावज्री याआपोदिव्या यावांशत मिमाउत्वापुरूवसो वस्वोवीरस्य मुमुक्षमाणा उतया स्तासान्निचिक्युर्यादेवेषु तन्व मभिवृत्यसपत्नान्यारुचोजातवेदस इति द्वाविंशतिर्या विसर्जनीयाः १

द्वितीयः खण्डः

साधु रसिकन्यां सिषक्तुन उरौदेवाः पुनरप्युरौदेवा विद्वेषां स्ययावाजं महिराध आवां सुम्नेवरिमन् तेते देवाय रायस्कामः प्रतिनस्तोमं स्वायुधासः पितुर्नपुत्रः सनोवाजेषु

गावोनयूथं पवस्वसोम मन्दयन्निति तिस्रः परिसुवानो नृभिर्ये मानः प्रत्यञ्चमर्कमनयच्छचीभिरिति द्विपदैकपदा द्वाविंशतिः (तासां सप्तदश द्विपदाः पञ्चैकपदाः) २

चतुर्विंशतिसंख्याकानि

प्रथमः खण्डः

या सुरथो भादेवादिविस्पृशा धियादेवैहदेवा श्रियेपूषन्ननमर्द्धन्ता वीतंहव्यानि बळित्था सम्राजाया कुहत्याकुहनुश्रुतौ किवांसा जोषवाकं यंयुवं नून इन्द्रावरुणे यंदेवपुरोहितिः प्राचीमुदेवा मक्षूयुभिर्नरा यस्यदेवा यन्नासत्या देवानमोभिस्तावांविश्वस्या मे अस्य प्रतीव्यमुभादेवा नृचक्षसा तानो देवादेवेति चतुर्विंशतिर्देवाः स्वरान्ताः १

द्वितीयः खण्डः

राजाकृष्टीनां नकिष्टएता तदिन्द्रप्रेवोषोयदग्निं चकर्थकारं भूरि चकर्थ जातूष्ठिरस्यप्रवयः सोमस्यमातवसमाकीवतः सललूकमेतद्घेदुतवीर्यं ताते गृणन्ति कथोनुते नहित्वदिन्द्र प्रतेपूर्वाणि पुरूयत्त एन्द्रपप्राथ विश्वेत्ताते त्वञ्चकर्थमनवेऽनुत्वादेवा नामानाचिद्वे किंदेवेष्विन्द्रयास्त्वं यस्य शश्वत्पपिवान् ममत्तुत्वादिव्यः सोम इन्द्रेति चतुर्विंशतिश्चकर्थ थकारेण २

त्रिंशत्संख्याकानि

प्रथमः खण्डः

उत्तिष्ठब्रह्मणस्पत आनोभद्राः सन्तेपयांस्यन्यस्तेषामधःप्रसूनः सहस्रंरायः प्रयन्तुवाजा आनोगोत्रा शुनंनःफाला आधेनव आवोयं त्वावामश्वासः सुयुजो वहन्तु प्रवोमह उतनएष्वानोराधांसि तपुर्वधेभिरच्छानो अङ्गिरस्तममुपत्वाजुह्वोऽच्छानः शीरशोचिषं हनाववृत्रमिन्द्रमच्छाम्यस्तुतिंजरितुः सरस्वतीसरयुराप ओषधीस्तिग्मेषव आयुधा पराद्यदेवा देवसेनानामुद्धर्षय दूरमितपणयः प्रत्यञ्चो यन्तु त्रिंशद् यन्तु तुकारेण १

एकत्रिंशत्संख्याकानि

प्रथमः खण्डः

घृतपृष्ठामनोयुज उदुत्यं सप्त वाह्वरितो यच्चित्रमप्नउषसो ये प्रप्तुरोदिव्यास इमंरथमधिये सनेमेचक्र मिन्द्रश्चयाचक्रथुर्येननपातं महित्वाष्ट्रं षोळ्हायुक्ता सुयुग्वहन्ति तंसूर्यंहरितः विददग्गौरस्य युवोर्वपुररंवहन्तिमन्यवे वहन्तिसीमरुणास ऋज्रासोमा ऽयुक्तसप्तहरितः सप्तस्वसारः सुविताय नवायन्तिसुभ्व आस्थाद्रथंस्वधया

तेसत्येनमनसा तंशग्मासो यस्माअन्येदशाऽक्षणयावान इन्द्रसुमेमरुत स्त्वचंपवित्रं येत्वावहन्तिमुहुर्यस्यमाहरितो भोजमश्वा इत्येकत्रिंशत् दुहन्ति तिकारेण

चतुश्चत्वारिंशत्संख्याकानि
साधुर्नगृध्नुर्य आदित्य युयोपनाभिरुपरस्य विसृष्टरातिर्याति संयज्जनान्क्रतुभिरुपवामवस्तमुष्टुहीन्द्र त्वंहिशूरो जेतानृभिः सभूतुयोहाऽऽयात्विन्द्रोवसे ऽध्वर्युभिः प्रस्थितंमध्वोअग्रं सवाज्यर्वा रथयुञ्जन्तिमरुतः शूरोवाशूरं नहित्वाशूर स्तमानून मपेजते दस्मोनसद्म न्नतेस्तोमानरां युध्मोअनर्वेन्द्रन्नरः प्रयआदित्यः सनिताविप्रो मक्षूदेववतोऽयुद्ध इद्युधावृतं प्रभङ्गीशूर एवाशूरो ऽस्येदिन्द्रोमदेष्वेषविश्वानिवार्यैषधियायाति पुनानोरूप आविशन्कलशं नावानसिन्धुं शूरोनधत्ते तिग्मेशिशानः शूरोयोयुत्सु परियत्कविः प्रसेनानी रत्नायुजं शाक्मनाशाकः पीत्वीसोमस्य नदयोर्विव्रतयोः प्रास्तोदृष्वौजा इति चतुश्चत्वारिंशच्छूरः शकारविसर्गाभ्याम्

षट्चत्वारिंशत्संख्याकानि
तञ्जेतुञ्जये समोहेवाये येयजत्रा यउग्रा यईङ्खयन्ति यइन्द्रायामीयऋक्षा यउदृचौन्द्र यमिष्ठासः सारथयोये येवाजिनं यद्वा जगज्जगति यस्तन्नवेद किमृचा प्रयआरुर्यज्ञेषु ये तइन्वस्य यईम्पुष्यन्तो ये अश्विना ये अंसत्रा यईञ्जगृभुस्तेस्यामय आनृचुर्ये वावृधन्त यऋष्वाऋष्टिविद्युता स्तेम आहुर्य आययुर्य आश्वश्वाः केष्ठानरो यईं वहन्ते द्विजन्मानो यऋतसापो विश्वेदेवाः शृणुत नयईषन्ते त्वंविश्वस्याधनदा ऋतावानः कवयो यइन्द्रयतयस्त्वा यऋज्रावातरंहसो यआर्जोकेष्वसुंयईयुरिदं पितृभ्यो वामं पितृभ्यो ये द्विबर्हसो ये यउदाजन् यऋतेन यईशिर आतत्त इन्द्रायव एते नर स्वपसा माविदन्परिपन्थिन इमेवयन्ति पितरः पश्यन्मन्येमनसेति षट्चत्वारिंशद् व्यक्तयो ये येकारेण १

अष्टाचत्वारिंशत्संख्याकानि
प्रैतुब्रह्मणस्पतिरिति द्वे आप्यायस्व समेतु ते प्रविष्णवे शूषमे त्वान ईळाभिः प्रजां त्वष्टा ते पितः प्रसूत इन्द्र सहस्राते शतावयं यस्ते अग्ने नयसान्य१ग्निं प्रयेवसुभ्यः सन्त्वाध्वस्मन्वदाते शुष्म इति द्वे पूषागा अन्वेत्वानोवाज्यर्वाचीते प्रशुक्रैतु व्येतु दिद्युच्छन्नः सूर्यः प्रब्रह्मेत्वच्छायं व ओश्रुष्टिः प्रयज्ञ एतु हेत्वः प्रमित्र-योरुपोरयिर्देवजूतोरिपुस्तेनस्तेयकृत् पितुर्न पुत्रः सुभृत आनार्यस्य प्रसून एत्वध्वर आस

एतु य ईवदपोषुण इयं देवीं वाचं युजेवां स्वस्तिदा आघृणिः प्रदेवत्राऽत एतु सहस्रदास्त्रिर्यातुधानो वाचास्तेनमिन्द्रो अस्मे सुमना इन्द्र आसां नेता बृहस्पतिरानो यज्ञं भारती पूर्वाया इव पतिरिव जायां स्वस्तिदा विशस्पतिरित्यष्टाचत्वारिंशदेतु तुकारेण १

पञ्चाशत्संख्याकानि

यत्सानोः सानु अमन्मह्यान्तादात्वापूर्वं शुचियत्तेऽपामुपस्थे क्वेदभूद् यदामागञ्छतं वा यस्याऽमत्रेभिः सिञ्चतामद्यमन्ध ओजोमिमानः पुनरात आतस्थुर्योमासुन्वन्तं विश्वेजानन्ति यद्धद्यावापृथिवी याँआभजो मरुतो याँआभजस्त्रिर्यद्दिवः आन्ताद्दिवो यदहानक्तं यामन्दसान उद्यत्सहो वयश्चन सुभ्व१आवयमङ्कूयन्तं स्थूरयोराध्वन् यआनय दधस्मैषुरोदसी यस्य देवैरालिनासोऽजामिमन्यस्तभूयमान आशयत् स निभ्य आवह उपवोविश्ववेदसो देवासोबर्हिर्यो अस्मान्वीर आसएतु यन्ते श्येनो यत्सोमेसोमे याइन्द्रभुजो य इन्दुर्वारमावरेष्वदधुस्तन्तुमावरेष्वदधा समिन्द्रेरय द्विबर्हसो य ऋतेन सूर्यमुपदस्युमागाद्यस्मिन्नाजुहवुः कदावसो श्येनस्य पुत्र आभरत् पदाभरत् सुतेसातेनेत्येतेषां पञ्चाशदाकारपूर्वं मकारमुदात्तम् १
यो यन्ति येन यस्य यदा यथा यदभि हीष्टं यं यन्तु ये या अकारमुदात्तम् ।
परींघृणाचरत्यायोविवायो दुष्यदेवः किमुश्रेष्ठो यास्ते धारा यमैच्छाम प्रवोदेवायेति वर्जयित्वा २

पूर्वरूपाणि

प्रथमः खण्डः

वास्तोरित्येतत् पतिशब्द उत्तर आविर्हविर्ज्योतिः
शोचिरित्युत्तरश्चेत्ककारोऽथोपान्तपश्यन्ति शब्दौ देवयुर्मातुस्तानि पदप्रवादे विदुर्वसुः पशुरित्येतानि कविशब्द उत्तरे निष्क्रव्यादं निष्कृथ निष्पिपर्तनस्वादुष्किल द्यौष्पितर्वसतिष्कृता तपोष्पवित्रं त्रिष्पूत्वी धीष्पीपाय विभिष्पता द्यौष्पिता ददुष्पज्राय वसुष्कुविन्मनुष्पिता पितुष्पिता पितुष्परि परिशब्दात् कृशब्दे पदमध्ये नामिनो विसर्गस्य च कपयोः षत्वम्पूरिति वर्जं दुरोकशोचिर्वर्ज उरुज्योतिर्वर्जम् १

द्वितीयः खण्डः

प्रथमे द्वितीये चाष्टमे मण्डले त्रिष्वन्यत्र तृषु । आस्वमद्म विवातजूतः प्राजाना जिह्वं पृक्षोवपुः साहाय इति वर्जम् । श्नथयन् स्वर्षाः पिबतु स्तर्य स्रवितवे स्वभिष्टिसुम्नः स्वश्वयुस्पट् श्मश्रूणीन्द्रो विसर्गेण । ऋङ्मध्ये इन्दो सोम पवमानस्वरान्ते रसवर्जिते पदं

च यत्र गव्यानि कनिक्रदत् सकारं तत्र निर्दिशेद्धियः कृष्टीश्चकर्षणः स्पृधो मृधो माया मतीर्नियुतो नमन्त भुव इति विश्वा विसर्जनीयाः । रातानि जातानीति विश्वा स्वरान्ता का सा रायो जनानामिति पथ्यास्वरान्ता । सञ्जग्मिरे वर्जम् । स्वाध्यः स्वर्विदः स्वर्दृशमृतुभिः श्रवाय्यमिति पवमानस्वरेण । विशां कृष्टीरसीति मानुषीणां विश्वा सान्त्वा वर्जम् । अण्वीभिस्तनाऽसिप्रचेतास्तना लुप्तसकारो बर्हिराजते क्रमेण सकारनकारौ । प्रनेतः प्रचेतः क्रमेण रेफविवृत्ती । ऊर्ध्वो विवक्ति इत्यतः पूर्वं विवक्मि शेषे विवक्ति । जुषस्वनःप्राग् घृताची स्वरेणान्यत्रान्यथा । प्रवांघृताचीवर्जम् । पूर्वार्धे वृणक्त्युत्तरार्धे वृणक्तु तथा स्पार्हास्वरेण विसर्गेण २

तृतीयः खण्डः

विंशत्यध्यायेष्वृञ्जत इषुध्यत्यन्यत्रान्यथा सजिह्वया विश्वोराये वर्जम् । एतवरुणं१वयमित्यध्यायेषु गन्त ह्रस्वमन्यत्र दीर्घमागन्ता वर्जम् । तन्नु पिब श्रोता दीर्घमन्यत्र ह्रस्वमुपश्रोता वर्जम् । प्रत्यष्टकं द्वितीये सप्तमेऽध्याये दिप्सशब्दोऽन्यत्रान्यथा । यथा तोके तथा तनये उभे शब्दव्यतिरेकेण यथा यकारस्तथा तकारो यासुजूर्णिर्वर्जम् । यथा दिवा तथा पृथिव्या दिवोवासानुवर्जं यथा रोदसी तथेमे नैतावदिति वर्जम् ।

यथा रोदसी तथा मही महीमित्रस्य वरुणस्येति वर्जम् ।

यथाभिपरितत्रज्मन् पकारं सिन्धुर्हवां वर्जम् ।

अभिश्रितोऽधिश्रितः कोह कस्मिन् प्रप्रान्ये यमुनायामुतन एनेतिवर्जम् । गोवाचशब्देति दुहानास्तरेणान्यत्रान्यथाऽगावोवर्जम् । अश्व कर्ण द्रोण सधमाद हरय गिरय उषर्बुध यवय शब्दे वहन्त्वग्नेयुक्ष्वाऽऽस्थाद्रथं तंशग्मासो भोजमश्वा वर्जम् । अन्तम्वेः प्रगृह्यं नमध्ये वसवोऽक्तून्मरुतो गृणन्ता मेहनेति रुद्रा विसर्जनीयाः । अन्नं पिता परशुर्जातवेदा इति सुदुघास्वरान्ता । एना दिवा स्रवितवे वरीय उतो इति पृथिव्यास्वरान्ता सनोविश्वावर्जम् । द्यावापृथिवी यत्र व्यवहिते तत्र पृथिवी प्रगृह्यम् । अस्मे युष्मे त्वे अमी च प्रगृह्याः । उपोत्तमन्नानुदात्तन्नपद्यमूधः सदो रजो वक्षःसु इत्येकपदान्यग्नौ ह्वैषा पृषा त्वष्टा सविता पिता माता नेष्टा भ्राता होता राजेति स्वरान्ता ३

चतुर्थः खण्डः

या सुप्रतीकं निष्कृतं पुरोहितिः क्षत्रं दाशति शवसा भिषज्यथोवयमित्येषु पदेषु परतः स्थिते असुर आदित्य देव वरुण मित्र पदकाले दीर्घस्वरान्ता । अवेंद्र सुक्रतो पुरो नासत्या सविताऽगा दयं सूर्याया वर्जम् । कवचतपरस्तु हणपरश्चसुद्रु । प्रसेनानीरूर्ध्वंसेना

स्वरान्ता मघोनाम्मंहिष्ठावर्जम् । अग्ने क्रतुं धर्माणि विश्वं त्वं विश्वानि पुष्यसि अर्वद्भिर्वाजं सोअग्ने धत्ते समुदाकाव्या वर्जम् । पश्चादुत्तरदुःखण्डवर्जं गोभिष्टरेमवर्जम् । पिबतं सोम्यं मधु विषमीहळे समीनहळे हेळो मुञ्चतं मित्राय राया पूषा गध्य विषच्छकारवत् । नव्येभिस्त्मने वाजान् कृणोत द्वे नय प्रतरं परेषुन१ अर्द्धमदात् शेषं दात् नाह कुत्साय वर्जम् । वेधा वाजपेशसं तरीषणि मर्त्यानां मन्यसे रयिं हिरण्ययीरिन्द्र जनान्मर्त्याय रयीणां वासयामसि प्रीणन्ति पर्युपब्रवामहै क्रतुम्प्रपूर्वं तमन्यत्र तत् । सीदतं मधुमत्तमं पातं सपदमन्यत्र गळन्तम् । मायिनं पिष्टं कुयवं वह कुत्सं वज्रेण हत्य मानुष वेद्यानां वधैः कुत्सं प्रसंयोगेषु । शुष्णमन्यत्र शुष्मम् । श्वघ्नी परिपन्थी पत्नी प्रजानती रथीयन्ती रम्भिणी काराधुन्य श्वा१की पितुमती वाजिनी वर्मी जारिणी पूर्वी पुष्करिणी सुदृशी महिषी वपुषी वक्ष्यन्ती रथी साची इकारा दीर्घा अधियदस्मिन् वर्जयित्वा ४

पञ्चमः खण्डः

ररिम ह्रस्वं जरिमा दीर्घम् । जनिम ह्रस्वं सुजनिमा दीर्घम् । विद्म ह्रस्वं वद्मा दीर्घम् । कृष्व ह्रस्वम् ऋष्वा दीर्घम् । अथ ह्रस्वं यथा दीर्घम् । जन्यं मकारेण जनयन्नकारेण । तुरं मकारेण तुरयन्नकारेण । भामं मकारेण धामन्नकारेण । कण्वं मकारेण कृण्वन्नकारेण देवं मकारेण देवान्नकारेण । पर्वतं मकारेण पर्वतन्नकारेण । पृथिवीं मकारेण वनस्पतीन्नकारेण । प्रतरं मकारेण प्रतिरन्नकारेण ५

अखण्डितानि

प्रथमः खण्डः

आवतमद्भुतं कक्षीवन्तं वसुत्तये सक्षणि चक्षणिर्विक्षु मघत्तये कनिक्रदत् प्रवणे वसुत्तये ऋभुरृभुक्षणमृभुक्षा आशव आयव उद्यते विद्यते गोपाजिह्वस्य गोपवनो गोत्रं गोधा गविष्ठिरं वम्रको विधन्त मार्ष्टिंषेणं
देवद्रीचाऽतिद्भुताऽनतिद्भुता मन्द्रयुस्तन्द्रयुर्भावयुर्भाज-युर्धारयुर्महयुः
प्रस्कण्वस्यैवयामरुत् प्रत्यञ्चं संवत्सरं नोधाः पुरुधा सहस्रधा वसुधा हिरण्यया आदित्या विपन्युवो दधिध्वे ऋघावान् ध्रजीमान् विश्वधा विदान उत्तानायामातिथ्यं सुग्म्यं सुग्म्याया विपन्यवः पतत्रिण एतावन्तं विपृक्वद् घृणीयमान आघृणिराघृणे मधुपनस्युवः सवित्रे १

द्वितीयः खण्डः

युवद्रिक् त्वद्रिक् पराचैः कियेधाः पञ्चाशदङ्गिरस्वत् पुरुषत्वता विरुक्मता

दिवित्मताऽस्निधानैर्विश्यो हरिद्रवोऽमविष्णवो वृचीवन्त ओमानं त्रसदस्युररमति-
ररंभ्रातृव्य इषुध्यवो हेषस्वतः सुरामं शुभायत उत्तमाय्यं महीयुवो
रथिरायतामस्मद्र्य१गादध्न्यास उत्तभिता वृषाकपे नृतवोनुदितासः खरमज्राऽसूयन्
हरित्वता तिरश्चीनः सरञ्जनमर्वशेभिरर्वतो हिरीमशो हिरीमान् सुषुवांसं
वृचीवन्तोऽस्मत्राञ्चः शिञ्जारमयज्वानं स्कभित्वी जनित्वी
पृत्सुतीरित्येतान्यखण्डितानि २

खण्डितानि

प्रथमः खण्डः

आश्रुत्कर्ण सूर्यायपन्थां तासामिहरनर्वाणंरथेशुभं मानःसोमपरिबाधस्त्वाञ्चित्रश्रवस्तम
श्रुधिश्रुत्कर्ण श्रुत्कर्णं स्वभूत्योजास्तङ्गूर्तय आशुन्नवाजम्भरं
युवानोरुद्रास्त्वंहिविश्वतोमुख द्विषोनोविश्वतोमुख सजातूभर्माऽनागास्त्वे प्रचर्षणिभ्यः
शरस्य चिदार्चत्कस्यापोनवांसुनोति प्रातारत्नम् यस्त्वायन्तं सचस्वास्तमीकेऽभिस्रुचो
हिमिन्द्रोअर्णोवृतं द्रविणोदाः पिबतुद्राविणोदसो याच्छ्रेष्ठाभिर्महद्देवानां कद्वाताय सुवेदं
कूचिदर्थिनं त्वद्वाजीवाजम्भरोविहाया ममच्चनत्वायुवतिः परास शतमश्मन्मयीनां
शुशर्माणं स्ववसञ्जरद्विषं सुसंशितावक्ष्योवक्षणेस्था वित्वक्षणः सञ्जर्भुराणस्तेयामन्ना
तद्वोयामिद्रविणममोदुध्रोगौरिव तंवः शर्धंरथेशुभं कुत्राचिद्रण्वस्तेजिष्ठा
यस्याऽपश्चाद्दघ्वने १

द्वितीयः खण्डः

अस्माकमिच्छृणुहि रायआकुहचिद्विदे रिपःकाश्चिद्यावहसि स्पर्धन्ते वाउ
विद्वेषणमुतसातीरुतसिन्धून्नग्ने त्वांकामया यातञ्छर्दिष्पा विनिचतुष्कं
विश्वेसतोमहान्तश्चोदयन्मतेज्येष्ठं चोदयन्मतेऽघाघा श्वश्वस्त्वानिदोनितृम्पसि
यओजोदातमोमद इन्दोसमुद्रमीङ्खयपवस्वविश्वमेजय त्वया वीरेण
तङ्गीर्भिराशुरर्षान्वस्मैजोषं शिक्षावयोधः परिणःशर्मयन्त्या भगोनृशंस इन्द्रपातमो
देवपानो विप्रस्य यावयत्सखो वासोवायोवीनां यईं वहाते सकृत्स्वं१ये अग्निः
सप्तिमग्निर्वीरमृक्सामाभ्यां किंशूरपत्नि प्रियङ्काचित्करं रोदसिप्रा उतामृतत्वस्य
देवापिर्देवसुमतिं वाशीभिस्तक्षताभरे कृतं शुनमष्ट्रावी युत्कारेणावृश्चदद्रिं षट्त्रिंशाश्च
घृणीवानित्येतानि खण्डितानि २

द्वैपदानि

मर्धानाभाद्वे यद्वास्थोत्रिध्यन्तरिक्षो दुषो यमध्यस्था उषः शृणुतं वृषणा शुनमन्धाय

स्यातम्पातन्नः समत्सुत्वा त्वं सत्पतिर्यजतोधिष्णायः प्रियन्धुक्षेष्यन्तः समानादासद-
सोऽच्छागुरिषितास्तिस्रो महीरुपरा भद्रन्ते किंसऋधक् नरेता देवस्य त्रातुस्ता अस्य सन्
हरीणां वृषन्नुतत्वास्त्री सत्वन्नो अर्वन् वयमुत्वापथः प्रमायाभिः प्रयन्ति यज्ञं
निरंहसस्तमसः परोमात्रयाऽस्यानवे सिप्रशर्धमयत्प्राक्स्थः त्वेसुपुत्र सोमःपरिक्रतुना शूरो
युत्सु हरिःपर्यद्रवत्वन्त्यत्पणीनामापवस्वदिशामिमन्नः
शृणवद्युवांहघोषा प्रभुर्जयन्तं यत्त्वायामि यस्तेमन्योविधदाभूत्या सहजाः कीदृङिन्द्र इमा
गावो देवीः षळुर्वीरप्रकेतंसलिलं प्रनोयच्छ विशस्पत १
इति द्वैपदानि

पदगाढः

प्रथमः खण्डः

मानस्पते त्वन्नःकवे सुतेसुतेति प्रोष्वस्मैत इच्छन्तमेषक्षेतितः अश्व्योवारः सृज
यःसप्तरस्मिः सृजत् । यउदृचीन्द्रये यउदृचियज्ञेयः । मन्द्रो मकारस्स्वरितम् ।
पतिहर्यसिसिकारस्वरितं अजोभ तक्षद्भत् । अर्थमिद्युवते परादेहिविशते । तेनस्तम् उर्जं
नस्ताम् । यमेन दत्तं अकारमुदात्तं ध्यस्वरितम् । देवाइदस्य यकारमनुदात्तं
ध्यकारमुदात्तं तिकारस्वरितम् । यमेनाध्यतिष्ठत् ।
हिरण्यशृङ्गो यो अध्यतिष्ठत् । उपह्वयेदेनाम् । अधयदेनान् उतत्वेनां यःसुम्नैरेनान्
निवेवेति ति । यन्त्वाजनासो सि । द्रुहमनिन्द्रां दर्शन्न्वनिन्द्रान् । आदधिक्राः
सर्वानुदात्तम् । सद्यश्चिन्मध्योदात्तम् । नूमन्वानो वक्षणा । प्रदैवोदासो मज्मना १

द्वितीयः खण्डः

सन्धाता दीर्घं क्षमारपो ह्रस्वम् । मर्तश्चिद्वो निध्रुविवाशीमेको निध्रुविः । किमन्ये
मध्योदात्तम् ।
आवामनुदात्तम् । वृत्रस्यत्वा सि आवोयक्षति । हविर्हविष्मोसि उन्मध्वस्ति ।
कृणोत्यविवेनन् ।
कस्याविवेनम् । समुवो यन् समुवांयम् । मातेवपद्धरसेसि । आवांराजानौ पाति ।
बृहद्वयस्त । कृतन्नस्तम् । अहंमनुर्यश्च । संभानुना यस्य । हुवेवो यविष्ठं नक्षद्दाभं
शविष्ठम् । उत ब्रुवन्तुयः । तमुत्वायम् । अस्माकं सुपारा । अस्मा आपः सुपाराः । आनः
सनिष्यसि । सूरः सनिष्यति । एवावस्वस्ते गोमदश्वावद्वः । पातिप्रियं रि । यदुस्रियाणां
रु । त्वष्टारञ्च । मन्दन्तुत्वामघवन्निन्द्रश्च । सोमयास्ते ताभिः । येते सरस्वस्तेभिः ।
आयाहि पयद्वा पि । अग्रामीन्द्र वशः । निखातमिन्द्रो वशत् । गिर्वणः से एतं ते ।

प्रयुजोवाचो दत् । मृजानो दः । वृथा व्यक्षरन् । अयं सयो व्यक्षरत् । सरस्वतीं नक्षमाणाः । आदित्यै रक्षमाणाः । पत्तोजगारान्वेति द्वैपदम् । प्रत्यस्यान्वेष्यवगृह्यम् । सत्यं ददृश्वान् । उत स्म ददश्वान् । स न इन्द्रपानः । एवा देवपानः । स नो मदानामसि । स नो हरीणां तमः । क्रत्वा दक्षस्य जनयन्त । केतुं यज्ञानां महयन्त २

तृतीयः खण्डः

उतानागा हन्ति । यत्पर्जन्यो हंसि । अनुतन्नो नः । तुरण्यवो नाः । अनासो चः । अपादं चम् । सुदासे चः । व्यानवस्य चम् । रथं शुम् । रथो शुः । तीव्रा याः । स्थाऊषु याम् । जन्मना सुतः । मन्मना परि । त्वां विश्वे पूर्वस्वरितम् । विश्वे हित्वा परस्वरितम् । ययातिविश्वा परस्वरितम् । सुगेभिर्विश्वा पूर्वस्वरितम् । यत्रौषधीः परस्वरितम् । यस्यौषधीः पूर्वस्वरितम् । त्यंसुमेषमपरस्वरितम् । सूर्यस्येव पूर्वस्वरितम् । अस्मेतदिन्द्रावरुणावसुस्यात् । अस्मे स इन्द्रावरुणावपि । कथा ते सामन् ससस्य धामन् । अजनयन्तूतोत् । त्वं तुग्रन्तूतोः । यदीञ्चकारेन्द्रस्तंपदीष्ट । ठदसौ त्ना अभीवर्तेनासपत्नः । तं घेमग्निं स इधानोऽग्निः । व्युप्रथत उपस्था । अरेणुभिरुपस्थात् । स राजसि जिघ्नसे । सत्रात्वं तोशसे । वर्गमधे सुश्रियं वर्गादौ दुष्टरम् । विराजति त्वेषम् । घृतश्चुतः श्वेतम् । नाभाऽपामूर्मौ राजापामूर्मिम् । अवविद्धं प्रविद्धमवगुह्यम् । इन्द्रासोमाप्रविध्यतं द्वैपदम् । ईषानासोहिरण्ययाः । अयं निधिर्न्यृष्टः । यत्तेतत् । यन्त्वासः । वध्रासूनोदाः पदत्रयमकारवर्जम् । प्रस्तोकोऽदात् पदद्वयमकारपूर्वम् । पुरा नूनमर्का शन्नो भवन्तु स्वर्काः ३

चतुर्थः खण्डः

यः कुक्षिराद्युदात्तम् । इमं जुषस्व सर्वानुदात्तम् । आपूषं दिवः उपस्रक्वेषु दिवि । त्वं दिवोधृषताभिनत । देवकञ्चिद्बृहतोभेत् । दिवश्चित्ते महित्वम् । गायत्रस्य महित्वा । देवोनय उदात्तम् । इमाञ्चनोऽनुदात्तम् । यातेष्वप्सु यानि स्थानानि विक्षु । मानो अकृते दाः । संवांशता दात् । इन्द्र इन्द्रियैर्यंसत् । इन्द्रो वसुभिर्यच्छतु । युवाभ्यामुशती सुनोति । हवमुशती शृणोतु । कृणात्यस्मा उशते सुनोति । याभिः शचीभिरन्तोदात्तं युवं वन्दनमनुदात्तम् । विश्वो विहाया ऊहिषे । तंगूर्धया ऊहिरे । अहन्निन्द्रो वाच्यः । अयमग्निर्वाक्यः । धीरासः पदमजुर्यं वावृधानावजुर्यम् । युवां यज्ञैः प्रयुक्तिषु । प्रदेवत्रा प्रयुक्ति । सुप्राङ्ज एति । पिशङ्घरूप एतु । इन्द्रमजुर्यं हवामहे । तं विखादे करामहे । न दक्षिणा पश्चा । आयातं पश्चात् । अयन्त एमि पश्चात् । इदं कवेरभ्यस्तु मह्ना । अयमस्मिजरितरस्मि मह्ना । राकामहं तु । शुष्मेभिस्ति । अच्छा नमोभिर्यक्षत् । त्वं

देवानां यक्षि ४

पञ्चमः खण्डः
व्रताते ततन्थ । व्यङ्गेभिर्विवेश । सतःसतो जनिम । इन्द्रोदिवः सवना मिहः पावकास्तकारम् । आदेवाद्देवश्चकारम् । समुद्रेण तः । अप्यध्वर्युभिस्तीः । अन्नायदवृणीतसोमम् ५

षष्ठः खण्डः
ममैतानसृजद्विसिन्धून् । अग्निर्जातवेदाः । विश्वारोधांसि पूर्वीः । मात्रेनुते पूर्वी । ये अंसत्रान्तोदात्तम् । ते वायवे सर्वानुदात्तम् । ये गोमन्तं धत्थ । यं युवं धत्थः । सेद्दभवश्चमर्त्यम् । यइद्ध इन्द्रस्य मर्त्यः । अहमपो न प्रगृह्यम् । प्रपूर्वजे प्रगृह्यम् । नाहं यातुं सपाम्येकपदम् । यस्ते अग्नेसपातिद्वैपदम् । प्र ते पूर्वाणि चकर्थ । प्रेन्द्रस्य बोचञ्चकार । हरीरथे अर्वाक् । आविश्वतो अर्वाङ् । मृळतनस्तन । विश्व आदित्यास्त । यो मेधेनूनांददत् । तावां नुनव्यौ दधत् । मायावान्तम् । उनत्तिभूमिं सम् । तासत्पतीना । ते हिसत्यानः । अधाहोता न्यसीदः । अहं होता न्यसीदम् । सखायो मही । तन्त्वामदाय महीः ६

सप्तमः खण्डः
दशरथान् नकारम् । दशाभीशुभ्यो दकारम् । यज्ञायज्ञावः से । आनऋते ते । अरुषस्य दुहितरान्या ।
प्रबाबधानान्याः । मानो अज्ञातास्तरामसि । भगन्न चरामसि । अच्छामयं द्यावायं रायाहिरण्येयं । प्राचीवाशीवयं अयं सहस्रं सत्यः । येनाममुद्रं सद्यः । इन्द्रो महना रोचयत् । त्वमिन्द्राभिभूरसि रोचयः । पुत्रः कण्वस्य वामनुदातम् । यो वामाद्युदात्तम् । पुत्रिणाताऽश्नुतः । इहैवस्तं माऽश्नुतं । यासप्तबुध्नमिन्द्रो विसर्गेण । इमन्नु मायिनं मकारेण । उक्षान्नाय विधेम । यज्ञानां रिषेम । अन्तश्चेंदो । अधधारयेन्दुः । मरुत्वन्तं हवामहे । अभिवत्सं नवामहे । यन्तेश्येनस्तम् । एषदिवं तः । एते शुक्रासस्ति । देवाव्यो नस्तु । सोचिन्नु वृष्टिः । सोचिन्नु सख्यासः इन्द्र द्विषः । क्षेत्रवित्तरो द्रुहः । दिविस्वत इयर्त्ति । पावकवर्चा इयर्षि । परो निरृत्यै । दूतो निरृत्याः ७

अष्टमः खण्डः
त्वन्तां इन्द्र शुरसमज्र्या जिगेथ । अग्ने घृतस्य शोचिषा । अग्ने जरितरक्षसा ।

प्रसाक्षितिर्घोषथः । महान्ता मित्रावरुणा तः । विद्मात आजगन्थ । प्रियं त आबभूथ । स वृत्रहेन्द्रो बभूव । अधा ह्यग्ने बभूथ । अन्विन्द्रं वावशाने । अधीवासं वावसाने । पृक्षस्य चारुः । कीलालपे चारुम् । ददृश्र एषां या । तासां निचिक्युर्याः । अकारि ब्रह्म नमस्यन्तः । तव श्रिया दशस्यन्तः । आ श्येनासो गत । यस्य वा गथ । मित्रश्च नो जुषेताम् । अश्विना थाम् । अग्नीषोमा बभूवथुः । अधा ह्यग्ने बभूवतुः । आ ते मदन्तः । उदु श्रिये रुशन्तः । अस्मे रयिं रराथाम् । इन्द्रासोमा युवं रराथे । अया रीयते । त्वां रीयसे । उत रात्री धर्मभिः । उतेषिषे यामभिः । व्यूर्ण्वती दिवो युयोति । स सुत्रामा युयोतु । श्रद्धाइत्ते ति । शुद्धो वृत्राणि सि । स्तोतारमिद्रासीय न त्वा सन्त्य । भगश्च दातु । दितिश्च दाति । विवस्वतो गृणन्ति । शतन्धारामृजन्ति । स देवेषु वनते । ता देवेषु वनथः ॥

दिवो नो वृष्टिं धाराविसर्जनीयाः । दिवो न विद्युद्धारा स्वरान्ता । अतः समुद्र मव पश्यति ।

कस्यस्वित्सवनमवगच्छति । अभियेसन्त्यादभुर्वि-श्वायस्मिन्नादधुः ।

वायोजुषाणोऽग्नेगृणानः । अग्नेतवत्यदस्त्याप्यम् । ययोरस्त्यध्याप्यम् ।

इमेजीवादेवहूतिः । साध्वीं देवहूतिं द्वितीयमर्द्धर्चस्य । यत्स्थोगृहेत्यान्नुगृभे । सोमारुद्रा तु । परोमात्रयाति । तिग्मायुधौसुमनस्यमाना । रथवाहनं सुमनस्यमानाः । उग्रोजज्ञे आसे । परोमात्रेव्यानट् । प्रब्रह्म ववृत्याम् मकारेण । प्रब्रह्माणो ववृत्या विसर्गेण । गर्भ आनुषगिन्द्रः सुतेषूक्थ्यम् । यागौरदितिं ये । देवान् हुवेऽवसेवसून् । दाशराज्ञे सुदासे । अन्यत्र सुदासम् । यद्ध वृथाषाट् । ऊर्जो वृषावाक् । शग्ध्युदात्तम् । त्वंसत्यमनुदात्तम् । अवानोधेहि । वातो देहि ८

नवमः खण्डः

त्रिःसौभगत्वं मोषुण इन्द्रयथा तवस्वधावो वित्वानरो मात्वातनन्मात्वातप दच्छिद्रागात्रा अस्मभ्यन्तद् गमद्देवेभिः सिन्धुर्हवां नाहायमग्निरभिक्रन्दा क्रन्दयेलामन्योजनयत् सरस्वत्यभिनः सनुत्येनत्यजसाऽमांमित्रावरुणा माकिरेनेन्द्रमिद्विमहीनां सचापूतक्रतौसनं सत्राच्यामघवासोमपीतये ऊर्मिर्ननावमावधीन्मानोहार्दित्विषावधीर्मानः समरणेवधीः पुरानुजरसोवधीत् साकंवृधा साकं युजाऽहमर्णांसि मोषुण आरेअघा ग्राहिर्जग्राह गर्भन्धेहीति द्वात्रिंशदकारवर्जम् ९

दशमः खण्डः

वृषायमाणश्चोष्कूयमाणः पाहिधूर्तेर्घनेवविष्व गपि-

प्राणीच प्रबाहवापृथुपाणिर्विदद्यदि प्रयत्स्तोता रुजदरुग्णं सइदस्तेव तीव्रान्घोषान्
मानोनिदेचवक्तव उदुतिष्ठसवितस्तेसीषपन्त न्यरातीरराव्णां पुरुनृम्णायसत्वने
क्रव्यादमग्निमथेमेनं देवमादनमिन्द्रत्वायज्ञः क्षममाणं सुत्रामाणं प्रथमद्वितीयं
यथासंहितम् १०

एकादशः खण्डः

प्रातर्यावण आस्मारथं समानमेकं वृषन्निन्द्रेन्द्र एणमायोनिमग्निर्घृतवन्तमरं म
उस्रयाम्णेऽरमनुस्रयाम्णे शक्रएणं हव्यावृषप्रयाव्णे त्वंवरो युवंवरो यथावरो
उग्रादभिप्रभङ्गिण इति णकारसंहिते पदं नकारान्तम् । सत्यमूचुरित्था सृजाना
इन्द्रमृळवहन्तिसीं प्रनिस्वरं त्वायुजाऽमाचतेतुम्रं नयन्तोगर्भमिति मकारान्तम् ११

द्वादशः खण्डः

अयं समहमातनु यथाशार्याते वन्दारुदेवो वदन् ग्रावा युक्तग्रावा पुरूसहस्रा वधूरियं ज्याइयं
प्रयज्ञमम्ना प्रराधसा चोदयाते स्वादुःपवाते परिष्वजातेलिबुजेव नवाउमां कियदासु
कतरोमेनिमथेदं विश्वं यानऊरू उशती विश्रयाते देवेषु चिद्धारयात इतिकारवर्जम् १२

त्रयोदशः खण्डः

पिबपिबत सन्त्यसह प्र नामयात । क्व । तृष्णुत । तक्षत कृष्णियाय । अस्य । विद ।
नोदात्तम् । इन्द्र । अशाते । दैव्येन वनेम । जुषस्व । सोम्याय । उत । अवचष्ट । ऋष्व
भूम । ऋतेन । यत्र । इन्द्रस्य । धत्त । पात । सप्त । यज्ञियाय द्वयेन । संवरणस्य ।
अच्छ । वरुणाय । नाधमानाय । ततक्ष । उप । दशस्य । पुरुष्टुत । नय । समह । वप ।
शरभाय । गायत । पवमानऋतुभिः । सुतंसोम । अहासत । अकृण्वत । च । ब्रह्म । अत्तन
। मित्रेव । एव तेनेति पञ्चाशदकारविवृत्तिस्वरान्ता इन्द्र ऋभुक्षा इन्द्र ऋषिर्वर्जयित्वा १३

चतुर्दशः खण्डः

अथाते अन्तमानाम् । युक्ष्वाहिकेशिना । अयन्ते स्तोमः । उदुत्तमम् । अथान उभयेषाम् ।
अश्विना मधुमत्तमम् । व्यश्नुहि तर्पय । मूर्धा दिवः । अथा ते अङ्गिरस्तम । प्रसुविश्वान्
। युक्ष्वाहि वाजिनीवति । अग्नीषोमाहविषः । वधैर्दुःशंसान् । गोजिताबाहू । त्वामुग्रमवसे ।
य इन्द्राग्नी चित्रतमः । यदब्रवम् । अश्ववंहि । उप ते स्तोमान् । अथायुवाम् । युवंदधीचः ।
प्रसुज्येष्ठम् । अदर्शिगातु । अद्यादेवान् । पञ्चपादं पितरम् । प्रजां त्वष्टा विष्यतु ।
अथामन्दस्व । अर्वाञ्चमद्य । नूनन्देवेभ्यः । वैश्वानराय पृथुपाजसे । ऋतस्य वा केशिना
। अतितृष्टं ववक्षिथ । सयन्ताविप्रः । ताभिर्देवानाम् । यस्त्वद्धोता । अग्ने तृतीये सवने ।

अयन्ते योनिः । अगच्छद्विप्रतमः । त्वं सद्यो अपिबः । इन्द्र ओषधीः । जहि शत्रून् । उपप्रेत । अवद्यमिव । अथाब्रवीत् । क इमन्दशभिः । अथैतवाजाः । किं मयः स्वित् । एकंविचक्रचमसम् । पुरुकुत्सानीहि । स्त्रियो हि दासः । इन्द्रपिब तुभ्यम् । उपब्रह्माणि शृणवः । परितृन्धि । माकिर्नेशत् । क्रतुं ह्यस्य । इमे सोमासो अधि । यद्द्रुह्यव्यनवि । नहि वांवव्रयामहे । नूनमथ । विश्वेषाम् । अग्निन्नमा । अपाधमत् । मरुद्भिरिन्द्र । सनाचसोम । तवेमाः प्रजाः । परिहिष्मा । आ हि द्यावापृथिवी । बर्हिषदः पितरः । अग्निष्वात्ताः । अतिद्रव । यदा शृतम् । यदागच्छाति । वृक्षेवृक्षे । कुर्मस्ते । अहरहर्जायते । द्वे ते चक्रे । सुमङ्गलीरियम् । दैवीपूर्तिः । कीदृङ्ङिन्द्रः । एहगमन् । वज्रेण हि । यावयावृक्यम् । अर्वाग्देवाः । अथाहिवाम् । अथासपत्नी । अहमस्मि सहमाना । बृहस्पतिर्नयतु ।
इति सप्ताशीति थकारेण अन्यत्र धकारः १४

रेफकारिका
रतो रेजच्च रेजञ्च रेजन्ती रुद्र रेवतीः
रूपैश्च रुशमासैश्च रुद्रैश्च रिरिषीष्ट च १
राजन् राष्ट्रञ्च राशिश्च रायो राय रथर्यसि
रराति रपसो राज्ञो रभस्व रभसद्रथे २
रारावाथ रराव्णां च रवथेन रपांसि च
रथो रजप्रवादैश्च रेफाद्याः सप्तविंशतिः ३
इति बोन्दलक्षणं समाप्तम्